# ॥ श्रीचामुण्डेश्वरी अष्टोत्तरशतनामस्तोत्रम् ॥

श्री चामुण्डा माहामाया श्रीमत्सिंहासनेश्वरी
श्रीविद्या वेद्यमहिमा श्रीचक्रपुरवासिनी ॥ १॥

श्रीकण्ठदयित गौरी गिरिजा भुवनेश्वरी
महाकाळी महाल्क्ष्मीः माहावाणी मनोन्मणी ॥ २॥

सहस्रशीर्षसंयुक्ता सहस्रकरमण्डिता
कौसुंभवसनोपेता रत्नकञ्चुकधारिणी ॥ ३॥

गणेशस्कन्दजननी जपाकुसुम भासुरा
उमा कात्यायनी दुर्गा मन्त्रिणी दण्डिनी जया ॥ ४॥

कराङ्गुळिनखोत्पन्न नारायण दशाकृतिः
सचामररमावाणीसव्यदक्षिणसेविता ॥ ५॥

इन्द्राक्षी बगळा बाला चक्रेशी विजयाऽम्बिका
पञ्चप्रेतासनारूढा हरिद्राकुङ्कुमप्रिया ॥ ६॥

महाबलाऽद्रिनिलया महिषासुरमर्दिनी
मधुकैटभसंहर्त्री मधुरापुरनायिका ॥ ७॥

कामेश्वरी योगनिद्रा भवानी चण्डिका सती
चक्रराजरथारूढा सृष्टिस्थित्यन्तकारिणी ॥ ८॥

अन्नपूर्णा ज्वलःजिह्वा काळरात्रिस्वरूपिणी
निषुंभ शुंभदमनी रक्तबीजनिषूदिनी ॥ ९॥

ब्राह्म्यादिमातृकारूपा शुभा षट्चक्रदेवता
मूलप्रकृतिरूपाऽऽर्या पार्वती परमेश्वरी ॥ १०॥

बिन्दुपीठकृतावासा चन्द्रमण्डलमध्यका
चिदग्निकुण्डसंभूता विन्ध्याचलनिवासिनी ॥ ११॥

हयग्रीवागस्त्य पूज्या सूर्यचन्द्राग्निलोचना
जालन्धरसुपीठस्था शिवा दाक्षायणीश्वरी ॥ १२॥

नवावरणसम्पूज्या नवाक्षरमनुस्तुता
नवलावण्यरूपाड्या ज्वलद्द्वात्रिंशतायुधा ॥ १३॥

कामेशबद्धमाङ्गल्या चन्द्ररेखा विभूषिता
चरचरजगद्रूपा नित्यक्लिन्नाऽपराजिता ॥ १४॥

ओड्यान्नपीठनिलया ललिता विष्णुसोदरी
दंष्ट्राकराळवदना वज्रेशी वह्निवासिनी ॥ १५॥

सर्वमङ्गळरूपाड्या सच्चिदानन्द विग्रहा
अष्टादशसुपीठस्था भेरुण्डा भैरवी परा ॥ १६॥

रुण्डमालालसत्कण्ठा भण्डासुरविमर्धिनी
पुण्ड्रेक्षुकाण्ड कोदण्ड पुष्पबाण लसत्करा ॥ १७॥

शिवदूती वेदमाता शाङ्करी सिंहवाहना ।
चतुःषष्ट्यूपचाराड्या योगिनीगणसेविता ॥ १८॥

नवदुर्गा भद्रकाळी कदम्बवनवासिनी
चण्डमुण्ड शिरःछेत्री महाराज्ञी सुधामयी ॥ १९॥

श्रीचक्रवरताटङ्का श्रीशैलभ्रमराम्बिका
श्रीराजराज वरदा श्रीमत्त्रिपुरसुन्दरी ॥ २०॥

शाकम्बरी शान्तिदात्री शतहन्त्री शिवप्रदा
राकेन्दुवदना रम्या रमणीयवराकृतिः ॥ २१॥

श्रीमत्चामुण्डिकादेव्या नाम्नामष्टोत्तरं शतं
पठन् भक्त्याऽर्चयन् देवीं सर्वान् कामानवाप्नुयात् ॥॥

इति श्री चामुण्डेश्वरी अष्टोत्तरशतनाम स्तोत्रं ॥॥